# ॥ श्रीसूक्तविधानम् ॥




B.N. Shrinath Udupa
TRIPURASHRI #1/238
Karikallkatte Japthi Post
Kundapur TQ 576211
Udupi DST
Cell:- +91-9740069904
Email:- shrinath.udupa@gmail.com

॥ श्रीगुरुभ्यो नमः ॥ ॥ श्रीरस्तु ॥ ॥ श्रीमहागणाधिपतये नमः ॥

श्रीआनंदकर्दमचिक्लीत इंदिरासुता ऋषयः । आद्यास्त्रिस्रोऽनुष्टुभः । चतुर्थी बृहती ।
पंचमी षष्ठ्यौ त्रिष्टुभौ । ततोष्टावनुष्टुभः । अंत्याप्रस्तारपंक्तिः । श्रीरग्निर्देवता ॥
हिरण्यवर्णामिति बीजं । तां मावहजातवेदेति शक्तिः । कीर्तिमृद्धिं दधातुम इति कीलकम् ॥
.........................................................................................................................विनियोगः ॥

**॥ पंचदशऋक् मंत्रन्यासः ॥**

हिरण्यवर्णां – शिरसि
तां म आवह – नेत्रयोः
अश्वपूर्वां – कर्णयोः
कां सोस्मितां – नासिकायां
चंद्रां प्रभासां – मुखे
आदित्यवर्णे – कंठे
उपैतु मां – बाह्वोः
क्षुत्पिपासामला – हृदि
गंधद्वारां – नाभौ
मनसः काम – गुह्ये
कर्दमेन प्रजा – पादौ
आपः सृजंतु – ऊर्वोः
आर्द्रां पुष्करिणीं ..चंद्रां.. – जान्वोः
आर्द्रां पुष्करिणीं ..सूर्यां.. – जंघयोः
तां म आवह ..प्रभूतं.. – पादयोः

**॥ षडंग न्यासः ॥**

ओं नमो भगवत्यै महालक्ष्म्यै हिरण्यवर्णायै – हृदय
ओं नमो भगवत्यै महालक्ष्म्यै हरिण्यै – शिर
ओं नमो भगवत्यै महालक्ष्म्यै सुवर्णरजतस्रजायै – शिखा
ओं नमो भगवत्यै महालक्ष्म्यै चंद्रायै – कवच
ओं नमो भगवत्यै महालक्ष्म्यै हिरण्मयै – नेत्र

ओं नमो भगवत्यै महालक्ष्म्यै लक्ष्म्यै – अस्त्र

**॥ ध्यानम् ॥**

अरुणकमलसंस्था तद्रजः पुंजवर्णा
करकमलधृतेष्टाभीतियुग्मांबुजाता ।
मणिमुकुट विचित्रालंकृतिः पद्ममाला
भवतु भुवन माता संततं श्रीः श्रियैनः ॥

**॥ मुद्रा ॥**

कमलं कलशं धेनु ज्ञानमंजलि मेवच ।
पंचमुद्राः प्रदर्श्याथ श्रीसूक्तं प्रजपेद्बुदः ॥

**॥ पंचादश ऋक् जपं कृत्वा ॥**

॥ **श्रीसूक्तयंत्रम्** ॥ अष्टदल । द्वादशदल । षोडशदल । (द्वात्रिंशद्दल) । वृत्तद्वय । भूपुरद्वय ॥

॥ **पीठशक्तयः** ॥ मंडूकादि परतत्त्वांत पीठदेवताभ्यो नमः ॥

॥ **लक्ष्मी नवशक्तयः** ॥ विभूत्यै । उन्नत्यै । कांत्यै । हृष्ट्यै । कीर्त्यै ।
सन्नत्यै । व्युष्ट्यै । उत्कृष्ट्यै । ऋद्ध्यै ॥

॥ **समष्टिमंत्रः** ॥ श्रीं श्रीदेव्यासनाय नमः ॥

॥ **आयुध** ॥ कमल । कलश । अभय । वरद ॥

॥ **गायत्री** ॥ महालक्ष्म्यै च विद्महे विष्णुपत्न्यै च धीमहि । तन्नो लक्ष्मीः प्रचोदयात् ॥

॥ **एकाक्षरी मंत्र ऋष्यादि** ॥ भृगुऋषिः । निचृद्छंदः । श्रीर्देवता ।
शं बीजं । रं शक्तिः । ईं कीलकम् ॥.........विनियोगः ॥

॥ **षडंगम्** ॥ श्रामित्यादि षडंगम् ॥

॥ **ध्यानम्** ॥ या सा पद्मासनस्था विपुलकटितटी पद्मपत्रायताक्षी
गंभीरावर्तनाभि स्तनभरनमिता शुभ्रवस्त्रोत्तरीया ।
लक्ष्मीर्दिव्यैर्गजेंद्रैस्नापिताहेमकुंभैः
नित्यं सा पद्महस्ता मम वसतु गृहे सर्वमांगल्ययुक्ता ॥

॥ **मूलम्** ॥ ॥ श्रीं ॥

॥ **आवरणम्** ॥ अंगैः प्रथमावरणम् ॥१॥

पद्मायै । पद्मवर्णायै । पद्मस्थायै । आद्रायै । तर्पयन्त्यै । तृप्त्यै । ज्वलन्त्यै । स्वर्णप्राकारायै ॥२॥

इंद्रादि ॥३॥ वज्रादि ॥४॥

श्रियै । लक्ष्यै । वरदायै । विष्णुपत्न्यै । वसुप्रदायै । हिरण्यरूपायै । स्वर्णमालिन्यै । रजतस्रजायै । स्वर्णप्रभायै । स्वर्णप्राकारायै । पद्मवासिन्यै । पद्महस्तायै । पद्मप्रियायै । मुक्तालंकारिण्यै । सूर्यायै । चंद्रायै । बिल्वप्रियायै । ईश्वर्यै । भुक्त्यै । मुक्त्यै । विभूत्यै । ऋद्ध्यै । समृद्ध्यै । कृष्ट्यै । पुष्ट्यै । धनदायै । धनेश्वर्यै । श्रद्धायै । भोगिन्यै । भोगदायै । धात्र्यै । विधात्र्यै ॥३२॥५॥

क्लीं उच्छिष्टचाण्डालिन्यै ॥

॥ **पंचमावरण देवता ३२ मंत्रेण क्षीरतर्पणं कुर्यात्** ॥

॥ **श्रीसूक्त होमान्वाधानम्** ॥ १) प्रधानदेवतां श्रियं श्रीसूक्तपंचदश मंत्रैः प्रतिमंत्रं आज्यदृव्येण आहत्यपंचदशसंख्यया ।

॥ **अन्यविधानम्** ॥ २) श्रीसूक्तस्य अष्टषष्ट्यावृत्या आज्यदृव्येण ४जन*१७ आवृत्ति ६८*१५=१०२०

॥ **अन्यविधानम्** ॥ ३) प्रधान देवतां महालक्ष्मीं बिल्वसमिदाज्यपायसदृव्यैः श्रीसूक्तमंत्रैः पंचदशावर्तनक्रमेण पंचविंशत्यधिकद्विशतवारम् ॥

॥ **अन्यविधानम्** ॥ ४)प्रधानदेवतां पुरुषरूपिविष्णुं पुरुषसूक्तेन षोडशावर्तन क्रमेण षट्पंचाशदुत्तरद्विशतवारमाज्येन पुनः महालक्ष्मीं श्रीसूक्तेन पंचदशावर्तनक्रमेण पंचविंशत्यधिकद्विशतवारमाज्येन ॥

॥ सौभाग्यलक्ष्म्युपनिषत् ॥

सौभाग्यलक्ष्मीकैवल्यविद्यावेद्यसुखाकृति । त्रिपान्नारायणानन्दरमचन्द्रपदं भजे ॥
ओं वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि ।
वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीरनेनाधीतेनाहोरात्रान्सन्दधाम्यृतं वदिष्यामि सत्यं वदिष्यामि ॥
तन्मामवतु तद्वक्तारमवतु अवतु मामवतु वक्तारमवतु वक्तारम् ॥ ओं शान्तिः शान्तिः शान्तिः ॥
हरिः ओं ॥ अथ भगवन्तं देवा ऊचुर्हे भगवन्नः कथय सौभाग्यलक्ष्मीविद्याम् ।
तथेत्यवोचद्भगवानादिनारायणः सर्वे देवा यूयं सावधानमनसो भूत्वा शृणुत
तुरीयरूपां तुरीयातीतां सर्वोत्कटां सर्वमन्त्रासनगतां पीठोपपीठदेवतापरिवृतां
चतुर्भुजां श्रियं हिरण्यवर्णामिति पञ्चदशर्ग्भिर्ध्यायेत् ।
अथ पञ्चदश ऋगात्मकस्य श्रीसूक्तस्यानन्दकर्दमचिक्लीतेन्दिरासुता ऋषयः ।
श्रीऋष्याद्या ऋचः चतुर्दशानमृचामानन्दाद्यृषयः ।
हिरण्यवर्णाद्याद्यत्रयस्यानुष्टुप् छन्दः । कांसोस्मीत्यस्य बृहती छन्दः ।
तदन्ययोर्द्वयोस्त्रिष्टुप् । पुनरष्टकस्यानुष्टुप् ।
शेषस्य प्रस्तारपङ्क्तिः । श्र्यग्निर्देवता ।
हिरण्यवर्णामिति बीजम् । कांसोऽस्मीति शक्तिः ।
हिरण्मया चन्द्रा रजतस्रजा हिरण्या हिरण्यवर्णेति
प्रणवादिनमोन्तैश्चतुर्थ्यन्तैरङ्गन्यासः ।
अथ वक्त्रत्रयैरङ्गन्यासः । मस्तकलोचनश्रुतिघ्राण–
वदनकण्ठबाहुद्वयहृदयनाभिगुह्यपायूरुजानुजङ्घेषु
श्रीसूक्तैरेव क्रमशो न्यसेत् ।
अरुणकमलसंस्था तद्रजःपुञ्जवर्णा करकमलधृतेष्टाऽभीतियुग्माम्बुजा च ।
मणिकटकविचित्रालङ्कृताकल्पजालैः सकलभुवनमाता सन्ततं श्रीः श्रियै नः ॥ १॥
तत्पीठकर्णिकायां ससाध्यं श्रीबीजम् ।
वस्वादित्यकलापद्मेषु श्रीसूक्तगतार्धार्धर्चा तद्बहिर्यः शुचिरिति मातृकया च
श्रियं यन्त्राङ्गदशकं च विलिख्य श्रियमावाहयेत् ।
अङ्गैः प्रथमा वृत्तिः ।
पद्मादिभिर्द्वितीया । सोकेशैस्तृतीया । तदायुधैस्तुरीया
वृत्तिर्भवति । श्रीसूक्तैरावाहनादि । षोडशसहस्रजपः ।
सौभाग्यरमैकाक्षर्या भृगुनिचृद्गायत्री । श्रिय ऋष्यादयः । शमिति बीजशक्तिः । श्रीमित्यादि षडङ्गम् ।
भूयाद्भूयो द्विपद्माभयवरदकरा तप्तकार्तस्वराभा शुभ्राभ्राभेभयुग्मद्वयकरधृतकुम्भाद्भिरासिच्यमाना ।
रक्तौघाबद्धमौलिर्विमलतरदुकूलार्तवालेपनाढ्या पद्माक्षी पद्मनाभोरसि कृतवसतिः पद्मगा श्रीः श्रियै नः ॥ १॥
तत्पीठम् । अष्टपत्रं वृत्तत्रयं द्वादशराशिखण्डं चतुरस्रं रमापीठं भवति । कर्णिकायां ससाध्यं श्रीबीजम् ।
विभूतिरुन्नतिः कान्तिः सृष्टिः कीर्तिः सन्नतिर्व्युष्टिः सत्कृष्टिरृद्धिरिति प्रणवादिनमो तैश्चतुर्थ्यन्तैर्नवशक्तिं यजेत् ।
अङ्गे प्रथमा वृतिः । वासुदेवाभिर्द्वितीया । बालाक्यादिभिस्तृतीया । इन्द्रादिभिश्चतुर्थी भवति ।
द्वादशलक्षजपः । श्रीलक्ष्मीर्वरदा विष्णुपत्नी वसुप्रदा हिरण्यरूपा
स्वर्णमालिनी रजतस्रजा स्वर्णप्रभा स्वर्णप्राकारा पद्मवासिनी पद्महस्ता
पद्मप्रिया मुक्तालङ्कारा चन्द्रसूर्या बिल्वप्रिया ईश्वरी भुक्तिर्मुक्तिर्विभूतिरृद्धिः समृद्धिः कृष्टिः पुष्टिर्धनदा धनेश्वरी श्रद्धा
भोगिनी भोगदा सावित्री धात्री विधात्रीत्यादिप्रणवादिनमोन्ताश्चतुर्थ्यन्ता

मन्त्राः । एकाक्षरवदङ्गादिपीठम् । लक्षजपः ।
दशांशं तर्पणम् । दशांशं हवनम् । द्विजतृप्तिः । निष्कामानामेव श्रीविद्यासिद्धिः । न कदापि सकामानामिति ॥१॥

---

अथ हैनं देवा ऊचुस्तुरीयया मायया निर्दिष्टं तत्त्वं ब्रूहीति । तथेति स होवाच ।
योगेन योगो ज्ञातव्यो योगो योगात्प्रवर्धते ।
योऽप्रमत्तस्तु योगेन स योगी रमते चिरम् ॥ १॥
समापय्य निद्रां सिजीर्णेऽल्पभोजी श्रमत्याज्यबाधे विविक्ते प्रदेशे ।
सदा शीतनिस्तृष्ण एष प्रयत्नोऽथ वा प्राणरोधो निजाभ्यासमार्गात् ॥ २॥
वक्त्रेणापूर्य वायुं हुतवलनिलयेऽपानमाकृष्य धृत्वा
स्वाङ्गुष्ठाद्यङ्गुलीभिर्वरकरतलयोः षड्भिरेवं निरुध्य ।
श्रोत्रे नेत्रे च नासापुटयुगलमतोऽनेन मार्गेण सम्यक्-
पश्यन्ति प्रत्ययाशं प्रणवबहुविधध्यानसंलीनचित्ताः ॥ ३॥
श्रवणमुखनयननासानिरोधनेनैव कर्तव्यम् ।
शुद्धसुषुम्नासरणौ स्फुटममलं श्रूयते नादः ॥ ४॥
विचित्रघोषसंयुक्तानाहते श्रूयते ध्वनिः ।
दिव्यदेहश्च तेजस्वी दिव्यगन्धोऽप्यरोगवान् ॥ ५॥
सम्पूर्णहृदयः शून्ये त्वारम्भे योगवान्भवेत् ।
द्वितीया विघटीकृत्य वायुर्भवति मध्यगः ॥ ६॥
दृढासनो भवेद्योगी पद्माद्यासनसंस्थितः ।
विष्णुग्रन्थेस्ततो भेदात्परमानन्दसम्भवः ॥ ७॥
अतिशून्यो विमर्दश्च भेरीशब्दस्ततो भवेत् ।
तृतीयां यत्नतो भित्त्वा निनादो मर्दलध्वनिः ॥ ८॥
महाशून्यं ततो याति सर्वसिद्धिसमाश्रयम् ।
चित्तानन्दं ततो भित्त्वा सर्वपीठगतानिलः ॥ ९॥
निष्पत्तौ वैष्णवः शब्दः क्वणतीति क्वणो भवेत् ।
एकीभूतं तदा चित्तं सनकादिमुनीडितम् ॥ १०॥
अन्तेऽनन्तं समारोप्य खण्डेऽखण्डं समर्पयन् ।
भूमानं प्रकृतिं ध्यात्वा कृतकृत्योऽमृतो भवेत् ॥ ११॥
योगेन योगं संरोध्य भावं भावेन चाञ्जसा ।
निर्विकल्पं परं तत्त्वं सदा भूत्वा परं भवेत् ॥ १२॥
अहंभावं परित्यज्य जगद्भावमनीदृशम् ।
निर्विकल्पे स्थितो विद्वान्भूयो नाप्यनुशोचति ॥ १३॥
सलिले सैन्धावं यद्वत्साम्यं भवति योगतः ।
तथात्ममनसौरैक्यं समाधिरभिधीयते ॥ १४॥
यदा संक्षीयते प्राणो मानसं च प्रलीयते ।
तदा समरसत्वं यत्समाधिरभिधीयते ॥ १५॥
यत्समत्वं तयोरत्र जीवात्मपरमात्मनोः ।
समस्तनष्टसङ्कल्पः समाधिरभिधीयते ॥ १६॥

प्रभाशून्यं मनःशून्यं बुद्धिशून्यं निरामयम् ।
सर्वशून्यं निराभासं समाधिरभिधीयते ॥ १७॥
स्वयमुच्चलिते देहे देही नित्यसमाधिना ।
निश्चलं तं विजानीयात्समाधिरभिधीयते ॥ १८॥
यत्रयत्र मनो याति तत्रतत्र परं पदम् ।
तत्रतत्र परं ब्रह्म सर्वत्र समवस्थितम् ॥ १९॥ इति॥ ॥ २॥

---

अथ हैनं देवा ऊचुर्नवचक्रविवेकमनुब्रूहीति ।
तथेति स होवाच आधारे ब्रह्मचक्रं त्रिरावृत्तं भगमण्डलाकारम् ।
तत्र मूलकन्दे शक्तिः पावकाकारं ध्यायेत् । तत्रैव कामरूपपीठं सर्वकामप्रदं भवति ।
इत्याधारचक्रम् । द्वितीयं स्वाधिष्ठानचक्रं षड्दलम् ।
तन्मध्ये पश्चिमाभिमुखं लिङ्गं प्रवालाङ्कुरसदृशं ध्यायेत् ।
तत्रैवोड्याणपीठं जगदाकर्षणसिद्धिदं भवति ।
तृतीयं नाभिचक्रं पञ्चावर्तं सर्पकुटिलाकारम् ।
तन्मध्ये कुण्डलिनीं बालार्ककोटिप्रभां तनुमध्यां ध्यायेत् ।
सामर्थ्यशक्तिः सर्वसिद्धिप्रदा भवति । मणिपूरचक्रं हृदयचक्रम् ।
अष्टदलमधोमुखम् । तन्मध्ये ज्योतिर्मयलिङ्गाकारं ध्यायेत् ।
सैव हंसकला सर्वप्रिया सर्वलोकवश्यकरी भवति ।
कण्ठचक्रं चतुरङ्गुलम् ।
तत्र वामे इडा चन्द्रनाडी दक्षिणे पिङ्गला सूर्यनाडी तन्मध्ये सुषुम्नां श्वेतवर्णां ध्यायेत् ।
य एवं वेदानाहता सिद्धिदा भवति ।
तालुचक्रम् । तत्रामृतधाराप्रवाहः । घण्टिकालिङ्गमूलचक्ररन्ध्रे राजदन्तावलम्बिनीविवरं दशद्वादशारम् । तत्र शून्यं ध्यायेत् । चित्तलयो भवति । सप्तमं भ्रूचक्रमङ्गुष्ठमात्रम् । तत्र ज्ञाननेत्रं दीपशिखाकारं ध्यायेत् ।
तदेव कपालकन्दवाक्सिद्धिदं भवति । आज्ञाचक्रमष्टमम् । ब्रह्मरन्ध्रं निर्वाणचक्रम् ।
तत्र सूचिकागृहेतरं धूम्रशिखाकारं ध्यायेत् । तत्र जालन्धरपीठं मोक्षप्रदं भवतीति परब्रह्मचक्रम् ।
नवममाकाशचक्रम् । तत्र षोडशदलपद्ममूर्ध्वमुखं तन्मध्यकर्णिकात्रिकूटाकारम् । तन्मध्ये ऊर्ध्वशक्तिः ।
तां पश्यन्ध्यायेत् । तत्रैव पूर्णगिरिपीठं सर्वेच्छासिद्धिसाधनं भवति ।
सौभाग्यलक्ष्म्युपनिषदं नित्यमधीते योऽग्निपूतो भवति । स वायुपूतो भवति ।
स सकलधनधान्यसत्पुत्रकलत्रहयभूगजपशुमहिषीदासीदास–योगज्ञानवान्भवति ।
न स पुनरावर्तते न स पुनरावर्ततइत्युपनिषत् ।
ओं वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितम् आविरावीर्म एधि ।
वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीरनेनाधीतेनाहोरात्रान्सन्दधाम्यृतं वदिष्यामि सत्यं वदिष्यामि ॥
तन्मामवतु तद्वक्तारमवतु अवतु मामवतु वक्तारमवतु वक्तारम् ॥
॥ ओं शान्तिः शान्तिः शान्तिः ॥

॥ स्वस्तिश्रीसौभाग्यलक्ष्म्युपनिषत्समाप्ता ॥

shrinath.udupa@gmail.com
+91-9740069904